# गोपुरसन्देशः

## (अन्य खण्डकृतयश्च)

कविः

बोम्मकण्टि श्रीनिवासाचार्यः

कल्याणी प्रचुरणलु
१-९-३४/५/१ राम्‌नगर्
हैदराबाद् - 500 048.

'Gopura Sandesah'
a collection of fourteen sanskrit lyrics by
*Bommakanti Srinivasacharyulu*

*First edition :* 1000 Copies



*Cover Design :* Harisankar

*Price :* Rs. 30/-

---

*This book is printed with the financial assistance of Sri Tirumala Tirupati Devasthanams under their scheme 'Aid to publish religious books'.*

---

*Type set by :* Fontline Graphics,
Hyderabad - 44
Phone : 660000

*Printed by :* **Kala Jyothi Process Ltd.,**
1-1-60/5, R.T.C. Cross Roads,
Musheerabad, Hyderabad - 500 020. A.P.

Jnanpith Awardee
Padmabhushan,
PROF. C. NARAYANA REDDY
M.a., Ph.D. D.Litt.
adviser to Government
culture and Language

Phones : Off : 242082
Res : 248451
Kala Bhavan,
Hyderabad - 500 004,
Andhra Pradesh _
27.3.95

# PREFACE

Sanskrit is one of the richest and most respected classical languages of the World. One amazing characterstic of this language is, it is a treasure not only of great literature, in all its forms, but also of all important sciences and arts. Besides the Vedas and Philosophical treatises, we find sublime literary compositions as well as works on all branches of knowledge in Sanskrit. It is this quality that can mainly be attributed to its intensive and even extensive influence on all the other Indian Languages. So far as Telugu is concerned, the impact of Sanskrit on it is stupendous and this is evident from the fact that in the current Telugu language we find over sixty five percent of terms of Sanskrit origin. Further, Andhras have been demonstrating their love and regard for Sanskrit by their remarkable writings in that language. Right from Apastambha, the illustrious author of Kalpasutra, eminent writers like Bhatta Bhaskara, Mallinatha Suri, Vidyanatha, Jagannatha Panditharaya, Narayana Teertha, Prataparudra Deva, Raghunatha Bhoopala, Jayapasenani and others did enrich Sanskrit by their outstanding contributions. There are considerable number of Andhra scholars of modern times also who are maintaing this glorious tradition of serving the Sanskrit language through their compositions.

Sri Bommakanti Sreenivasacharya, author of this book 'Gopura Sandesah' is an Andhra scholar-poet of distinction with fairly good number of published works to his credit. His name is quite familiar to the Sanskrit reading public and his poems frequently appear in leading Sanskrit journals of India. The present book is a collection of fourteen poems. With variety of content, nobility of thought and facility of expression, these poems make a very good reading, often taking the readers to heights of appreciation. I congratulate Sri Sreenivasacharya on bringing out this fine book of poems and I am certain that he will continue his services to the Sanskrit literature through his works.

DR. C. NARAYANA REDDY

"Vedanta Siromani"."Vedanta Visarada", "Vidvan"
**Dr. P. Sriramachandrudu**
M.A. Ph.D (Skt.) M.A. (English), M.A. (Hindi)
Recipient of President's Certificate of Honour
Professor of Sanskrit, O.U. (Rtd.)

**"Nandanam"**
7-1-32/4, P-2, Leelanagar,
Begumpet, Hyderabad - 500 016
Phone : 291200

# परिचयः

"आन्ध्रवाणीकवित्वेन, नैकेषाम् ऐतिहासिकानां, वाङ्मयादिसंबध्दानां च विषयाणां गवेषणेन, पत्रिका-ग्रन्थादिसंपादनेन च प्रथियशसः श्री बोम्मकण्टि श्रीनिवासाचार्यमहोदयस्य तदा तदा संस्कृते निबध्दानां लघुकृतीनां संग्रहरूपोऽयं "गोपुरसन्देशः"; यत्र आहत्य, चतुर्दशसु शीर्षकेषु विभक्ताः, पञ्चचत्वारिंशदुत्तरशतसंख्याकाः (145) सन्ति श्लोकाः।

श्रीमान् रामानुजयतिः किल गुरोराज्ञां धिक्कृत्य, सर्वान् जनानुद्दिधीर्षुः, गोष्ठीपुरदेवालयस्य गोपुर मधिरुह्य ततः तत्रत्येभ्यः सर्वेभ्योऽपि नारायणाष्टाक्षरीमन्त्रं श्रावयामास। तद्वृत्तान्त घटितमाद्यं लघुकाव्यं विंशतिभिः ल्शोकैः संदृब्धम् गोपुरसन्देशः" इति नाम्ना, तदेव च नमास्य काव्यसंग्रहस्य दत्तं कविना। व्दितीये लघुकाव्ये "वसन्ततिलकम्" नान्मि वसन्ततिलकवृत्तघटितैः पञ्चदशभिः ल्शोकैः वसन्तो वर्णितः, अनुष्टुभि ग्रथितैः त्रयस्त्रिंशभ्दिः श्लोकैः तृतीये काव्ये श्री सत्यसायी बाबा महोदयस्य उपदेशाः संकलिताः। अत एव चास्य नाम सत्यसायी गीतेति। चतुर्थे कालिदासप्रतिभा नाम्नि काव्ये कालिदासस्य प्रतिभा पञ्चभिः श्लोकैः प्रपञ्चिता। "मुकुलगीता" नाम्नि पञ्चमे पुष्पमुकुलस्याभिलाषः सूचितः। "हे विश्वकवे" इति षष्ठे षड्भिः श्लोकैः टागूर कविं मनसिकृत्य सर्वेषां कवीनां स्तुतिः, "आर्याभिनन्दनम्" इति दशल्शोक्यां राजेन्द्रप्रसादस्य अभिनन्दनं, "जयदेव प्रशंसायाम्" पञ्चभिः ल्शोकैः

सरस्वत्याः स्तुतिः, "हर्षो हर्षविवर्धनः" इति एकश्लोक्याम् हर्षवर्धनस्य वर्धापनं च निरबध्यन्त। आन्ध्रकविलोके विप्लवकवितापितामहत्वेन लब्धप्रतिष्ठस्य श्रीमतः "श्री श्री" महाकवेः एकस्य खण्डकाव्यस्य संस्कृतीकरणं "देशचरितानि" इति चतुर्विंशति श्लोकात्मकं काव्यमेकादशम्। भारतगणराज्य दिनोत्सवावसरे गीता नवश्लोकात्मिका "जयगीता" द्वादशं काव्यम्। "कृष्णोऽहम्" इति श्लोकत्रये राधाविग्रहदर्शनेन कवेः मनसि जातो भावः अनुसंहितः। अन्तिमे च विव्द्दभिनन्दने श्रीमतः डा. राघवन् महोदयस्य षष्टिपूर्तिसमये कृतं तस्याभिनन्दनं निबध्दम्। एवं लघुकाव्यसंग्रहेऽस्मिन् अनेकविषयसंबध्दाः श्लोकाः एकत्र संयोजिताः श्रीमता श्रीनिवासाचार्येण।

वक्रोक्तिजीवितकारेण यथा सूचितं– प्रायः यस्य कवेः या प्रकृतिः तदनुगुणमेव विषयं गृहीत्वा सः कवितां तनोति। अत्रत्याः रूर्वेऽपि विषयाः कवेः दीनजनोध्दरणादिप्रवणतां, भारतीयायां संस्कृतौ परां श्रध्दां, देशभक्तिं च विशदयन्ति । कवेः सुकुमारा प्रकृतिः रचनास्वपि प्रतिफलति। अत एव सर्वेऽपि श्लोकाः प्रसाद गुणभूयिष्ठाः हृदयान्यावर्जयन्ति सहृदयानाम्। स्थालीपुलाकन्यायेन एकः श्लोकः उध्द्रियते–

सदा श्रीमन्नारायणचरणकञ्जातमधुपी
कृतस्वान्ताः शान्ताः विहरत लसद्भक्तिसरसि।
पिबन्तस्तन्नामस्मरणमधु सुस्वादरूचिरं
निवृत्ताज्ञानान्ध्या भजत परमं वैष्णवपदम् ॥(गो.सं. ९)

"नखनिकृन्तनेन अस्माकं कियती वा बाधा भवति इति अविचिन्त्यैव स्त्रियः अस्मान् अवलुञ्च्य अवतंसयन्ति" इति किल

पुष्पाणि विलपन्तीति कश्चित् प्रसिध्दः आन्धभाषाकवितल्लजः आत्मनः करुणां प्राचीकटत्। अयं पुनः कविः "मुकुलगीतायाम्" परमेश्वर सेवायोग्यतयैवात्मनः धन्यतां मनुते लतान्तमिति रम्यं वर्णयन् स्वसहजां भगवद्भक्तिमाविष्करोति।

सर्वानपि भावान् आविष्कर्तुं या प्रभवति भाषा सैव सकल भाषामूर्धन्यतामधिरोढुं प्रभवेदिति हि संविद्रते विव्दांसः। "देशचरितानि" इति काव्ये अत्याधुनिकानामपि भावानामाविष्करणे संस्कृतभाषायाः अकुण्ठितां शक्तिं प्रदर्शयन्नयं कविः, प्रायः संस्कृतकवितासु प्राचीनानामेव यातयामानां विषयाणाम् अनुप्रवेशः इति केषांचिव्दिमूढात्मनां चिन्तितं मिथ्याकरोति। नह्ययमर्वतो दोषः यद्येनमाश्विकंमन्यो न सुष्ठु चालयति? दृश्यतामेकं पद्यम् :

नृणां चरित्रं खलु सर्वमेत
त्परस्परस्वापहृतौ प्रयन्तः।
नृणां चरित्रं खलु सर्वमेत
त्संग्रामरङ्गोत्थितरक्तसिक्तम्॥ (दे.च. 2)

एवं तदा तदा मानसक्षेत्रे समुत्पादितैः पुनरेकत्र संदृब्धैः काव्यसुमनोभिः सुमनसामानन्दं वर्धयन्नयं श्री श्रीनिवासाचार्य महोदयः सहृदयसंमानपात्रमिति न काप्यत्र संशीतिः

भीष्मैकादशी पुल्लेल श्रीराम चन्द्रः

११.२.१९९५

**Dr. R. Srihari**
Prof. & Head, Department of Telugu
Univercity of Hyderabad
Gachi Bowli , Hyderabad.

Res: 16-2-836/F/2,
Madhava nagar,
Saidabad,
Hyderabad - 500 069

# अभिनन्दनम्

महदिदं प्रमोदस्थानं यत् श्रीमन्तः बोम्मकण्टि श्रीनिवासाचार्य महोदयाः संस्कृतान्ध्रभाषयो र्विद्वत्कवयः नैकग्रन्थरचनेन भाषाद्वयं आद्यापि सेवमानाः साहितीरङ्गे विराजन्त इति।

गोपुरसन्देशाख्यमिद माचार्याणां काव्यं आधुनिक खण्डकाव्य प्रक्रियायां निबध्दं वर्तते। कथावर्णनं, ऋतुवर्णनं, महात्म प्रशस्तिः, कविप्रशंसा इत्यादि नैक विषयानधिकृत्य लिखिता श्चतुर्दश खण्डकृतयः अत्र विलसन्ति। आचार्याणमिमाः सर्वा आपि कृतयो हृद्या दृश्यन्ते। मधुमासलक्ष्मीवर्णनपरे वसन्ततिलकनान्मि कविताखण्डे विद्यमान मिमं श्लोकं पश्यत।

वायुस्वयङ्गह गलद्रसना पयोधेः
तीरे ललाटविहरच्चिकुरा स्मितास्या।
केयं समस्तजनदृग्विषयः सुरूपा
किं स्यादियं धृततनु र्मधुमासलक्ष्मीः॥

वसन्तशोभा वर्णनपरेयं खण्डकृति र्वसन्ततिलकच्छन्दसि निबध्देति परमौचितीविलसितं प्रतिभाति।

श्री सत्यसायी भगवतः प्रबोधानाधारीकृत्य लिखिता सत्यसायी गीता आचार्याणां न केवलं तेषु भक्तिं व्यनक्ति, अपि तु ललितशैलीनिर्वाहे तेषां दाक्ष्यमपि प्रकटयति। उदाहरणमेकं पश्यत:

प्रवाहे मज्जमानस्य दार्वेकं तारकं यथा
भवाब्धि मग्न जीवानां पुण्यमेकं हि तारकम्।

कालिदास कवितां प्रशंसन्तः आचार्या एवं वदन्तिः

कालिदास कवितासुधाहृदे
योऽवगाह्य न लभेत तत्सुखम्।
जन्मलाभफलवञ्चितो ध्रुवं
सोऽस्तु भूभृदथवाऽऽगमान्तवित्॥

भारते देशे संस्कृत साहितीव्याप्तौ आन्ध्राणामपि विशिष्टं स्था वर्तते। तच्च स्थानं श्रीमन्तः श्रीनिवासाचार्याः स्वीयसंस्कृत कृति सुष्ठु रक्षन्तीति तान् मुहुर्मुहुरभिनन्दामि।

श्रीनिवासकृतिश्चेयं
भव्यभावविलासभाक्।
गैर्वाणी प्रेमिणः सर्वान्
सन्तोषयतु सर्वदा ॥

आर्। श्रीहरिः



)r. N.V.R.KRISHNAMACHARYA
M.A., Ph.D., A.P.E.S. (Retd)
'ormer Chairman,
)fficial Language commission, Govt. of A.P.

Phone : Res. 817397
H.No. 1-8-76, P.G.Road
35, Jawahar Nagar,
Secunderabad-500 003.

# FORE WORD

This collection of poems in Samskrit headed by - **Gopura Sandesah** is vritten by Sri B.V.Sreenivasacharya - an idealist, well known as an eminent Telugu poet. Modern Telugu literature has reserved a coveted place for his ›oetry full of metrical melody, crisp cadence and sublime sentiments. He :ombines in him the etherial ardour of Shelly and the voluptuous opulance ›f Keats. His poetic vision has luminous wings by which he can soar over :ver expanding horizons. He is not an ineffectual angel of modern romanti-:ism. His roots are entrenched in hoary Samskrit culture and as a poet he is ι curious confluence of modern idealism and ancient classical enlighten-nent.

This book of Samskrit poems is dedicated to the memory of the Late Dr. Raghavan, the Samskrit scholar of Tamilnadu. This is the hall-mark of the dealism of Sri B.V.Sreenivacharya and bears the imprint of his veneration 'or values far above the practical mundane considerations of modern life. Let ne recall with a sense of privilege that sreenivasacharya has likewise ledicated his collection of prestine Telugu poem **Ovari** to me propelled by ›ure idealism. In actual private life, Srinivasacharya symbolises "simple iving and high thinking". He is a poetic ascetic, living in a lonely philosophi-:al hermitage which he has created in his mind.

This **Gopura Sandesah** is a collection of tiny literary islands which the ıuthor has created in the midst of the ocean of modern materialism. In this :luster are included Vasanta Tilakam- a poem which embodies the mystic :harms of the spring season. The meter chosen is Vasanta Tilakam. If Mandakranta', meter suits the mellifluous melody that is **Viraha** of **Megha Sandesa** of Kalidasa, **Vasanta Tilaka** symbolises the sensuous and sensitive ;ymphony of the surging spirit of the spring season. This is an esoteric :xperience which can be recognised by literary veterans in the field of ›rosody and poetics. The other captions are **Kalidasa Pratibha, Jayadev Prasasti, Desa Charitani** etc- all minor masterprices glorifying the summits of the hoary heritage of India.

Of course, **Gopura Sandesah** stands unique in this collection. It is an episode in the life of the great preceptor **Ramanuja**, the second in the philosophical Trinily of Hindu religion, the first being Sankara and the third Madhwa. **Ramanuja,** quite early in his youth, ascends the temple tower and proclaims the message of Truth and emancipation to the gathering masses.

His precepter has cautioned him not to divulge the sacred message to all and sundry. The transgression means prospective hell to Ramanaja and heaven to the initiated. Ramanuja was prepared to go to hell if the masses of people could obtain liberation. The soul of Ramanuja did not seek lonely self-realisation. His soul sought salvation for all people as well.

Sri Sreenivasacharya incidentally has proved that Samskrit is a living language and a sprouting spring of perpetual wisdom and eternal light.

Secunderabad - 500 003
10.4.1995 **N.V.R. KRISHNAMACHARYA**



# ACKNOWLEDGEMENTS

I can not adequately thank the four distingnished savants who readily agreed to introduce this slim book of my Sanskrit lyrics to the lovers of sanskrit poetry.

This collection, in fact, ought to have appeared about two decades ago when prof. V. Raghavan, former professor and Head, Sanskrit Department, University of Madras, and a renowned poet and researcher, to whose memory the volume is dedicated, was alive. Even the dedicatory verses were composed then and were read to him. Unfortunately the publication has been delayed due to circumstances beyond my control.

My thanks are due to Tirumala Tirupati Devasthanams, Tirupati, but for whose financial assistance the volume would not have seen the light of day.

I am also thankful to Mr. Harisankar, Proprietor, Fontline Graphics, not only for his neat execution of typesetting the book, but also for giving a suitable cover design.

I should also thank the printers and several other friends who contributed enormously in producing this book in its present form :

सर्वेषां सरसात्मनां
वितनुता मेषा मनीषारतिम्

*20-4-1995*
*1-9-34/5/1,*
*Ramnagar,*
*Hyderabad - 48*

**Bommakanti Srinivasacharyulu**

# काव्यानुक्रमसूचिका

पत्रसंख्

# कृतिसमर्पणम्

## डा॥ वि। राघव महोदयेभ्यः



आन्ध्रवाणीकविर्जातः सुरवाणी पदार्चकः।
[illegible]धवाख्यस्य गैर्वाणी कविकेकिनः॥

त्वं हि कारयिता नूनम् अहं कर्ताऽस्मि केवलम्।
तदस्यास्त्वं कृतेर्भर्ता श्री राघव महोदय!॥

अल्प भूषाऽपि नम्राऽपि बालाऽप्येषा कृतिर्मम।
त्वया बहुमता भर्त्रा मोदायास्तु मनीषिणाम्॥



# गोपुर सन्देशः

(निजगुरोः तिरुक्कोट्यूर्नम्बिनः अष्टाक्षरी मन्त्रोपदेशं प्राप्य, तन्मन्त्रोपदेशेन समस्तजनेभ्यः विमुक्तिं सम्पादयितुं गोष्ठीपुरस्थं आलयगोपुरमधिरुह्य, मन्त्रगोपने गुरोः पुरतः कृतां प्रतिज्ञामुल्लङ्घ्य, श्रीमद्रामानुजः तत्रत्येभ्यः सर्वेभ्योऽपि तन्मन्त्रसुधां व्यकिरत्। कथां तामवलम्ब्य विरचितमिदं काव्यम्। प्रायशः पञ्चाशद्भ्यः वर्षेभ्यः प्राक् श्रीमद्विशिष्टाद्वैत प्रचारसमित्या विजयवाटिका नगर्यां कश्चन रामानुजक्रतुः निर्वर्तितः। तदवसरे निर्वृत्ते कविसदसि प्रथमतः श्रावितमिदं काव्यम्। तदनन्तरं जयपुरीतः प्रकाश्यमानायां भारतीति मास पत्रिकायां प्रकाशितं च।)

१

सरोजेषूत्फुल्ले ष्वविकसित कल्हारततिषु
ह्रदेषु स्वच्छाम्भोमधुषु कलुषाम्भस्सु च समम्।
प्रसार्य स्वानंशून् विकसितजपासूनसुभगान्
चकास्ति प्रागद्रौ तरणि रवनीचक्षु रमलः॥

२

पुरी गोष्ठीनाम्नी सुकृतिजनगोष्ठी विलसिता
विरेजे सा प्रातः भुवि गलित वैकुण्ठमिव सा।
सुगन्धार्द्रैर्वातैः श्रवणसुखतूर्यामृतरवैः
प्रबन्धास्यैर्भक्तैः हृदि निहितरङ्गेशचरणैः॥

३

तदानीं पश्यत्सु प्रमुदितजनौघेषु पुरतः
महातेजोराशिः धृतविमलकाषायवसनः।
समारुढो रामानुज यतिपतिर्गोपुरतलम्
चकासच्छ्रीरङ्गप्रभुविजयशंसी ध्वज इव॥

४

पुरस्तिष्ठन्तं संयमिन मवलोक्यात्मनि तदा
ह्यमन्यन्ताधः स्थितजनगणा विस्मयवशात् ।
"किमेष स्यात्पूषा तिमिरनिचयोच्छेद निपुणः
उताहो शेषोऽयम् सकलभुवनोद्धारणचणः"॥

५

क्षणं वीक्ष्यायातं जननिवहमेनं यतिपतिः
वचोऽकार्षीद्रम्यं श्रवणयुग पीयूष ममलम्।
गृहीतायां वाण्यां यतिनृपतिना तज्जनगणो
निगृह्य श्वासानप्यवहितमना मौनमभजत्॥

६

"विपन्नाः! संसारे महति जलधौ नौविरहिताः!
अहो दीनाः! जीवाः! श्रृणुत भवतां मोक्षसरणिम्।
मदक्रोधाद्युग्रैः भुजगनिवहैर्दष्टजनुषाम्
सदा दुःखोद्वेगव्यथितमनसामार्तवपुषाम्"॥

७

"अहं कर्ता सर्वावनिगतसुखानां च विपदाम्
मदन्यः कोवाऽस्तीत्यनुचितमहाहङ्कृतियुताः।
किमेषा भ्रान्तिर्वः त्यजत कुमतिं दुःखफलदम्
कृपापाथोराशिं भजत वरदं रङ्गवसतिम्"॥

८

"शरीरं तद्विष्णोः खलु चिदचिदात्माऽखिलजगत्
किमु श्रीरङ्गेशो निजतनु मुपेक्षेत सदयः।
समस्तापन्नानां शरणमह मस्मीति खलु तत्
प्रतिज्ञातं गीताप्रथित चरम श्लोकविधिना"॥

९

"सदा श्रीमन्नारायण चरण कञ्जात मधुपी
कृतस्वान्ताः शान्ताः विहरत लसद्भक्तिसरसि।
पिबन्त स्तन्नाम स्मरणमधु सुस्वादरुचिरम्
निवृऽत्ताज्ञानान्ध्याः! भंजत परमं वैष्णवपदम्"॥

१०

"इमं श्रीमन्नारायणमधुरनामाक्षरयुतम्
महामन्त्रं नित्यं जपत शुभदं शुद्धमनसः।
य एनं ध्यायेयुः प्रतिदिनमपास्तेन्द्रियसुखाः
व्रजेयुस्ते दिव्यं पद मपुनरावृत्तिसुभगम्"॥

११

भणित्वैवं मन्त्रं मधु मधुर मष्टाक्षरयुतम्
पठित्वोच्चैस्त्रिस्तं सपदि विरराम व्रतिनृपः।
तदा रोदोव्याप्तं जयजयनिनादा उदगमन्
सुधालब्धौ देवा इव जनगणा हर्षमभजन्॥

१२

तिरुक्कोट्यूर्नम्बिः निगमनिगमान्तज्ञवृषभः
तदा तत्रायातः श्रुतसकलतद्वृत्तसरणिः।
गुरोर्यस्माल्लेभे भवहरणमन्त्रं तदुषसि
प्रतिज्ञाय श्रीमान् तदुदितवचःपालनविधौ॥

१३

समायातो नम्बिं र्यतिपतिमुखे दत्तनयनो
ह्यपृच्छद्गम्भीरै र्वचन रचनै रेवममलम्।
"किमेत द्वत्सैवं गुरुवचनधिक्कार मकरोः
महामन्त्रो गोप्यः सकलजनतां श्रावित इह"॥

१४

"न जानासि त्वं किं गुरुवचनधिक्कारफलितम्
कथं वा घोरं तन्निरयमधिगन्तुं प्रभवसि?।
अनर्हेभ्यो विद्यां विकिरति य उल्लङ्घ्य नियमान्
गतिस्तस्यावाच्या गुरुवचन धिक्कारकुमतेः"॥

१५

गुरोर्वाक्यं श्रुत्वा विनयकलितो लक्ष्मणयतिः
प्रणामं साष्टाङ्गं तदनु रचयन्नेव मवदत्।
"विजानामि स्वामिन्! भयदनिरयार्तिर्मम भवेत्
यदेवं स्वाचार्योदितवचनमेतन्न कृतवान्॥

१६

"तथाऽपीमान् दृष्ट्वा सततदुरितासक्त चरितान्
सदा शोकाविष्टान् सुखमिदमिदंनेत्यविदितान्।
अभूच्चित्ते – 'भूयान्मम निरय एकस्य भयदः
विमुक्ति स्सर्वेषां यदि भवति मन्त्रश्रवणजा'"॥

१७

“मदीयास्ते सर्वे भवतमसि यावन्मुकुलिताः
न तावत्काङ्क्षेऽहं परमपददिव्यस्थितिमपि।
मया स्वामिन्नेवं वचसि भवदीये ऽपचरितम्
महापापायास्मै रचयतु भवानर्हनिकृतिम्॥”

१८

कपोलौ संसिक्तौ सदयहृदयस्याऽश्रुनिकरैः
यतीन्द्रस्य स्पृष्ट्वा गुरुचरणमेवं कथयतः।
स्वशिष्यं लोकाना मवननिरतं वीक्ष्य वशिनम्
गुरुर्नम्बिः प्रीतः सरसमतिरेवं कथितवान्॥

१९

“अहो! वत्सासि त्वं मम गुरुरिदानीं प्रकटयन्
दयामार्गं नूत्नं परमपदसम्पादनविधौ।
अतीवाहं धन्यो यदभज मिदं गौरवपदम्
गुरो स्सर्वक्ष्माया अपि गुरुरहं कारणभुवः”॥

२०

पुना रोदोव्याप्तं जयजयनिनादा उदगमन्
“नमस्सर्वाराध्य प्रथितवचसे कर्मरतये।
नमोऽज्ञानध्वान्त प्रशम रवये ज्ञान रुचये
नमः श्रीमद्रामानुज भगवते भक्ति निधये”॥

# वसन्ततिलकम्

(मद्रास् नगर आकाशवाणी केन्द्रस्य आह्वानं पुरस्कृत्य मद्रास् पत्त वसन्तर्तुशोभां वर्णयन्तीयं खण्डकृतिर्विरचिता। मद्रास् आकाशवाणी केन्द्रत प्रसारिता च। अनन्तरं केन्द्र साहित्य अकाडमी प्रकाशितायां 'संस्कृ प्रतिभा' पत्रिकायां प्रकाशिता च।)

१

वायु स्वयंग्रह गलद्वसना पयोधेः
तीरे ललाटविहरच्चिकुरा स्मितास्या।
केयं समस्तजन दृग्विषयः सुरुपा
किं स्यादियं धृततनु र्मधुमासलक्ष्मीः॥

२

वृक्षा नगा जलधरा स्तरणिः श्शशाङ्कः
पौरा स्तदास्य विकस द्दरहास सूनम्।
चित्रं नवीनमिव मे प्रतिभाति सर्वम्
ह्लादं तनोति मधुमासनवावतारः॥

३

जन्मोत्सवं प्रकृतियोषित आरभन्ते
नानालताः कुसुम भूषण भूषिताङ्ग्यः।
झङ्कारमङ्गलरवै र्भ्रमरै स्समेताः
भर्त्रर्पिता नववधूरिव भाति पृथ्वी॥

४

आश्चर्यकृत् खलु वसन्तपराक्रमोऽयम्
वृद्धोऽप्यवृद्ध इव बालजनो युवेव।
विश्रान्तिलेशरहितो मदनोऽद्य लोके
सर्वो हि जन्तु रधुना नवचित्तवृत्तिः॥

५

कालोह्ययं बहुशतार्बुदवर्षवृद्धः
जातो युवैव मधुमासि पुनस्तथाऽपि।
कालस्य यौवनसनातनमूर्ति रेष
नूनं जगत्सुम विकासकरो वसन्तः॥

६

प्राच्यो न पक्ष्चिम जगत्प्रसवश्च नाऽयम्
सर्वावनीजन समान सुहृद्वसन्तः।
प्रेम्णा प्रशास्ति ऋतुराड्वसुधैकराज्यम्
नाना वचोभि रसकृन्नुतनैभवश्रीः॥

७

मल्ली गुलाबि वकुलादि मनोज्ञसूनैः
पुष्पापणो नयननिर्वृति मातनोति।
भृङ्गै स्तथा कुसुमकामिजनैः प्रपूर्णः
फुल्लानुरक्ति मिह वक्ति समीरणोऽपि॥

८

कोऽसौ वदेन्नगरवासिजनाय नास्ति
वासन्तनूत्न कुसुमोत्सव मञ्जिमेति।
स्याद्ग्राम शोभन विलोकन वञ्चितोऽयम्
बाह्यो वसन्त इति नैव स चान्तरस्थः॥

९

चूतेषु पल्लवित कोरकितेषु हृद्या
संश्रूयतेऽद्य नवजीवन मञ्जुगीतिः।
हेमन्तशीर्ण हृदयान्युपलालयन्ती
लीना मनोज्ञ पिकगीति रियं क्व पूर्वम्॥

१०

"किं गायसि त्वमिह गायकसार्वभौम!
कोऽर्थस्त्वया कविगुरो! प्रतिबोधितो नः।
प्राचीनमप्यतितरां नवमेतदास्ते
स्तौम्यद्भुतं पिकवर! त्वदमोघकाव्यम्॥

११

"भो! दक्षिणानिल! सुशीतल! वाहि नृणाम्
चित्तानि सङ्गरभयज्वर शोषितानि।
स्पृष्ट्वा विधेहि नवजीवन वाञ्छितानि
शक्तो भवा नघटनाघटनास्त्ववश्यम्"॥

१२

“नैराश्यभावहत! मृत्युनिविष्टचेतः!
पश्याद्य मृत्युविजयाङ्कमिमं वसन्तम्।
त्यक्त्वा भयानि भवितव्यकृतानि मित्र!
मोदस्व सम्प्रति वसन्त शुभोत्सवेऽस्मिन्॥”

१३

निम्बप्रसून नवचूत गुडादि युक्ताम्
भक्ष्योपदां मधुर तिक्त रसातिरुच्याम्।
यच्छन् वसन्त! सुखदुःख समत्वहेतोः
लोको भवन्त मुपसर्पति वत्सरादौ॥

१४

कुर्वन्निरास मखिलाहितं चित्तवृत्तेः
सिञ्चन् समस्तहृदयेष्वनुरागदुग्धम्।
पश्यंश्च लोकवदने दरहासरेखाम्
आनन्दभूरधिगतोऽद्य वसन्तराजः॥

१५

नवकुसुमधर स्स्मर द्वितीयो
मलयसमीर हित स्सुखालवालः।
प्रकृति मदवती प्रिय स्सुरुपो
जयति ऋतुप्रवरो वसन्तराजः॥

# सत्यसायी गीता

(सत्यसायीति नाम्ना प्रथितयशसां महात्मनां प्रबोधान् आधारीकृ रचितेयं 'सत्यसायी गीता)

१

कृतं यद्यत् त्वया नित्यम् – आनुभूतं च यत्त्वया।
तत्तत् संस्कार रुपेण – लग्नं भवति चेतसि॥

२

संस्काराणां समाहारो – नूनं मानव जीवितम्।
द्विविघास्ते च संस्काराः – सदसद्रूपभेदतः॥

३

अस्फुटा विस्सृता स्तेषु – सैकते हि लिपि र्यथा।
सुखदुःखप्रदा एव – दृढाः नित्यं स्मृता स्त्वया॥

४

अनेके बाल्यसंस्कारा – अपि ते यदि विस्मृताः।
जन्मान्तरोपलब्धानां – संस्काराणां कुतः स्मृतिः॥

५

संस्काराणा मनन्तत्वे – ऽप्यस्मिन् मानव जीविते।
सुदृढाः पञ्चषा एव – परिशिष्टा स्सयुरन्ततः॥

६

भवेज्जीवित वाणिज्ये - लाभ स्संस्कार एव हि।
दृढतमस्तु संस्कारः - स्मृतः स्यादन्तिमक्षणे॥

७

भक्ष्यान्येव स्मरत्येको - यद्यसौ भोजनप्रियः।
पुत्रान् पौत्रान् स्मरत्यन्या - यदि सा पुत्रवत्सला॥

८

अन्त्यकाले स्मृतो योऽसौ - संस्कारो बलवत्तमः।
भवेन्मूलधनं नूनं - [illegible]जन्मनः॥

९

स्मर्तव्यो यो हि संस्कारो - जीवितस्यान्तिमक्षणे।
तदार्जनोन्मुखी मेनां - कुरु जीवनवाहिनीम्॥

१०

अन्त्यक्षणं सदा स्मृत्वा - श्वः प्रभृत्येव जीवितम्।
नय त्वं धर्ममार्गस्थः - सत्यसौन्दर्य शोभितम्॥

११

भव त्वं साधुसंसेवी - पापदूरो गतव्यथः।
निर्ममो निरहङ्कारो - नित्य मन्योपकारकृत्॥

१२

सत्संस्कारोन्मुखं भूयात् - सत्ववत् साधु ते मनः।
दोष मात्मगतं ज्ञात्वा - सद्यस्तं परिवर्जयेत्॥

१३

स्वं दोषं यदि जानाति - तत्तस्य जननान्तरम्।
प्रबोधे वास्तवे भूते - नूत्नं बाल्यं भवेत्तदा॥

१४

सदा सन्निहितो मृत्युः - न मन्तव्येऽशुभस्तु सः।
अनुक्षणं नरो याति - मृत्यून्मुखस्तु तत्त्वतः॥

१५

जीवितधूमयानोऽसौ - मृत्युमेव नयेन्नरम्।
अध्रुवाहीतरे सर्वे - मृत्युरेको ध्रुवो भुवि॥

१६

त्यजेदिन्द्रय चापल्यं - लगेच्च संयमे मनः।
सत्त्वोन्मुखं मनः कुर्यात् - सत्संस्कार परायणः॥

१७

जीविताख्य शिलायास्तु - शाणः स्याद्रूपकल्पने।
प्रत्येकं कर्म ते तस्मात् - सत्कर्मप्रवणो भव॥

१८

प्रवाहे मज्जमानस्य - दार्वेकं तारकं यथा।
भवाब्धिमग्न जीवानां - पुण्यमेकं हि तारकम्॥

१९

व्यर्थं न स्यात् कृतं पुण्यं - कृतं पापं तथैव च।
निवृत्तः पापकर्मेभ्यः - तस्मात्त्वं षुण्य मार्जय॥

२०

सदेव पश्य नेत्राभ्यां - श्रवोभ्यां सद्वचः श्रृणु।
सद्वाक्यं वद नित्यं त्वं - भवेर्जेता न संशयः॥

२१

नियोजय करौ नित्यं - पवित्रेष्वेव कर्मसु।
ईश्वरं संस्मर स्वान्ते - बाह्ये भूयाः स्वधर्षकृत्॥

२२

संस्काराणां प्रवाहो हि - भूयादेकमुखः सदा।
पर्वताग्रे पतद्वारि - सर्वं नद्यां यथा विशेत्॥

२३

एकोन्मुखं स्रवद्वारि - नदी भूत्वांबुधिं ब्रजेत्।
मध्ये नूनं विनश्येद् हि - भिन्नै र्मार्गैः स्रवज्जलम्॥

२४

संस्काराणां प्रवाहोऽसौ – पुष्टो भावैर्यदा शुभैः।
तदा मृत्यु र्भवेन्नूनं – आनन्दनिलयः शुभः॥

२५

न भिद्यते शिला या च – घातैर्विंशतिभिः कृतैः।
भिद्यते शिथिलीभूत्वा – ह्येकविंशेन सा शिला॥

२६

निरर्थका न ते घाताः – विंशतिस्तु पुराकृताः।
यतोऽन्त्यस्य तु साफल्ये – घातास्त एव हेतवः॥

२७

तथा सत्कर्मणैकेन – मनस्ते लय मेष्यति।
सत्कर्म निरतो भूत्वा – यदि त्वं जीवितं नयेः॥

२८

सत्कर्माणि कृतानीह – स्यु र्व्यर्थानि न जात्वपि।
मनोलय महा सिद्ध्यै – उपकुर्वन्ति तान्यपि॥

२९

ईश्वर स्स हि सर्वेषां – संरक्षक इति स्मरन्।
सत्कर्म निरतो भूयाः – निक्षिप्य भारमीश्वरे॥

३०

सुतमुपेक्षते माता - संञ्चरन्त मितस्ततः।
धैर्यशिक्षामतिः किंतु - पतन्तं तं समुद्धरेत्॥

३१

ईश्वरोऽपि तथैवैनं - जीवात्मानं हि रक्षति।
जीवात्माख्य पटस्यास्य - तन्तुर्हस्ते जगत्पतेः॥

३२

सत्संस्कारै र्दृढं कुर्याः - तन्तुमेनं विमुक्तिदम्।
गम्यं नयति संस्कारो - जीविनं नात्र संशयः॥

३३

सत्कार्याचरणादेव - गम्यं याति नरोऽन्ततः।
ईश्वरस्मरणं नित्यं - मुक्ति मार्गे नयेन्नरम्॥



# कालिदास प्रतिभा

(मद्रास्नगरस्थया 'संस्कृत अकाडमी' इत्येतत्समित्यां 1955 तमे व
"कालिदासमहोत्सवः" प्रावर्त्यत। तं पुरस्कृत्य "कालिदासप्रतिभा" इ
पद्यसुमाञ्जलिरूपः एको ग्रन्थश्च प्रकटितः। प्रथमतः तस्मिन् ग्रन्थे प्रकटि
मिदं काव्यम्।)

१

कालिदास कविता सुधाह्रदे
योऽवगाह्य न लभेत तत्सुखम्।
जन्मलाभफलवञ्चितो ध्रुवम्
सोऽस्तु भूभृदथवाऽऽगमान्तवित्॥

२

उपमा रचनेऽतिकोविदो
ऽप्युपमा निर्विषयो महाकविः।
कृतधीरपि यः प्रसूतवान्
रसकुल्यां रुचिरा मधीकृताम्॥

३

वियति भुवि च शोभां सम्पुटीकृत्य सर्वाम्
तुलयत सुहृद स्तां कालिदासस्य वाग्भिः।
कविवचन महत्ता ज्ञायते व स्तदानीम्
ननु रसमयसृष्टि र्धातृसृष्टे र्विशिष्टा॥

४

रम्याकृतीनां न हि देशकालौ
त्रिकाल संशोभि कवीन्दुरोचिः।
यावद्दिशां नेत्रयुगे प्रकाशः
रस्येत तावद्भुवि कालिदासः॥

५

वकुलसुरभिलाः कामा
द्यखिल रुजाक्षेपकाः प्रमोदशिखाः।
श्री कालिदास वाचो
जयन्ति वाणी श्रवःकुरवका स्ताः॥



# मुकुलगीता

(आदौ आन्ध्रभाषायां विरचिता प्रकाशिता च। ततश्च गैर्वाण्यामनूदिता "संस्कृतप्रतिभा" पत्रिकायां प्राकाश्यत।)

१

अपचिनु मुकुलं नवोत्थ मेत
न्न खलु विभो! तव संशयोऽत्र कार्यः।
ननु मुकुल मिदं त्वयैव सृष्टं
भवतु तदीश! पुनस्तवैव भोग्यम्॥

२

विकसनविभवे न कामना मे
विकसितवत्यपि सौरभेण लोकान्।
जितवति च विभो! प्रसीद मह्यं
कथय फलिष्यति किं कथावसाने॥

३

क्षणविभव मुपेत्य सर्व सूनम्
जगति विभो! गलितं खलु प्रणश्यम्।
मम परिमल इत्यहम्मति में
न भवतु नाथ! मदल्पजीवनेऽस्मिन्॥

४

विरचनसमये त्वदङ्गुलीषु
क्षणसुख मापि यदद्य न स्मरामि।
अपचयसमयेऽपि सौख्यमेत
त्तव नखपीडनजं विभो! लभेय॥



# हे विश्वकवे!

(आदौ आन्ध्रभाषायां "विश्वकवि" इति शीर्षिकया खण्डकाव्यमे द्विनिर्मितं; रवीन्द्र शतजयन्त्युत्सवावसरे मद्रास्पत्तने कविपण्डित सभार मेकस्यां श्रावितं च। अनन्तरं गैर्वाण्यां परिवर्तितम्; "संस्कृतप्रतिभा पत्रिकायां प्रकाशितञ्च।)

१

क्रौञ्चं निषादशर दर्शित मृत्युवक्त्रम्
क्रौञ्चीं च वीक्ष्य सविधे करुणं लपन्तीम्
सत्त्वाकृतिस्त्वमभवः करुणावतारः
येनादिकाव्य मुदभू द्रसनित्यशोभि॥

२

धर्मस्य हानि रथ मोहमदादिवृद्धि
र्जाता यदा भरतपुण्यतपोवनेऽस्मिन्।
त्वं पञ्चमश्रुतिशुभां परिगृह्य वाणीम्
धर्मानुरक्त मकरो र्निखिलं च लोकम्॥

३

अस्यां महर्षिकरुणाधृतभारतोर्व्या
मिष्टै स्समस्त विभवैः परिशोभितायाम्।
कालीप्रसादकृत वाग्विभव स्तदानीम्
शृङ्गारवृष्टिममलां व्यकिरस्त्वमेव॥

४

रत्या प्रजा हृदयनीरसतां प्रमृज्य
वीरोक्तिभिश्चटुल निस्पृहतां प्रहार्य।
सिक्त्वा च कर्कशधियः करुणामृतेन
मर्त्यान् पुनः पुनरहो कृतवानमर्त्यान्॥

५

विस्मृत्य पूर्वविभवं परराज्यदास्ये
देशो यदाऽभवदयं बत भादरिद्रः।
त्वत्तः पुनः प्रसृमरा भरतार्षवाणी
सर्वावनीजनमनोहरणे प्रवीणा॥

६

काऽप्यस्तु नाम बहिराकृति रात्मवन्! ते
काऽप्यस्तु कण्ठसरणिश्च सदा विनूत्ना।
जानामि नूनमहमद्भुतगायकं त्वां
जानामि विश्वकवि मच्छरसाकृतिं त्वाम्॥

# आर्याभिनन्दनम्

(जयपुरतः प्रकाश्यमानायाः 'भारती' पत्रिकयाः निरूढायां कविता प्रतियोगितायां तृतीयस्थानं लब्ध्वा "नव्ययुगानुसारि सामयिक निर्माणदृष्ट्या आर्याभिनन्दनम् नितरां प्रशसार्हम्' इति निर्णायकैः प्रशंसितमिदम् खण्डकाव्यम्।)

१

राष्ट्रपतौ जाते श्री
राजेन्द्रे वितिमिरा दिशोऽभूवन्।
प्रासर दाशा ज्योत्स्ना
दीनानन कुमुद सङ्घेषु॥

२

नव विकसित भारतजन
रम्यस्वातन्त्र्य सरसिजेऽस्मिन्।
कस्सुरभिस्थानीयः
राजेन्द्र मिमं विहायान्यः॥

३

कृष्णो यदि स महात्मा
नेहृश्च पटेलुरिन्द्रजानिलजौ।
नव भारतसङ्ग्रमे
राजेन्द्रोऽजातशत्रु रभूत्॥

४

भाविमहाराज्याधिप
योगं सततप्रसन्न हृदयं च।
दृष्ट्वेवास्मै पितरौ
कृतवन्तौ नाम चान्वर्थम्॥

५

धर्मविलोपे जाते
जगति पुनर्धर्मचक्र सुस्थितये।
भारत राष्ट्प्रतिं खलु
पश्यति लोक स्समस्तोऽपि॥

६

द्रष्टा श्रीनेहुर्यदि
सहजीवन शान्ति नूत्न मन्त्रस्य।
सङ्गरभूतोच्चाटन
चणस्य नेतैष राजेन्द्रः॥

७

उद्धर्तुं सुरवाणीं
भारतजगदमरसंस्कृतिं च तथा।
यो बद्धकङ्कणोऽसौ
राजेन्द्रो मूर्तिमान् धर्मः॥

८

परदास्यविमुक्तायाः
पुराविभव पुनरवाप्ति मिच्छन्त्याः।
भरतोर्व्याः स्वप्नानाम्
फलसन्धाता हि राजेन्द्रः॥

९

भो! भो! महामनीषिन्!
भो! राष्ट्पते! प्रसन्नगम्भीर!
सम्प्राथ्र्यसे त्वमेवं
कविनानेनान्ध्रभूमिभुवा॥

१०

"अस्तु सर्वजनता निरीतिका
चास्तु सद्गुणिन एव पूजनम्।
मस्तके हिमगिरिर्यथोन्नता
भारती जयतु ते सुपालने"॥

# जयदेव प्रशंसा

(मद्रास् संस्कृत अकाडमीति संस्थया निरूढायां "जयदेव कवितोत्सव" यां श्रावित मिदं काव्यं प्रथमतः।)

१

जयदेव कवेर्वचःश्रिय
श्चरणन्यासविदग्धतां नुमः।
स्वसतीमिति नैव नर्तकी
मकरो द्योऽपि रसज्ञमण्डलीम्॥

२

कृष्णभक्तिमहाम्भोधिम् मथित्वाऽच्छरसामृतम्।
उन्निनाय स एवैको जयदेवो महाकविः॥

३

'श्रीवासुदेव रतिकेलि कथा समेताम्'
को विस्मरेत्? भरत भूतललब्धजन्मा?।
माधुर्य धुर्य महिताष्टपदीं मनोज्ञां
यावद्रवीन्दु भगणा गगने चरेयुः॥

४

कविता विपणावष्टा
पद तुल्यानर्घवस्तु किं कथय?
किं तज्जयदेवकवे
रष्टपदीतो भवेदन्यत्॥

५

आकर्षति स्वकविताद्भुत मन्त्रशकत्या
शैवांश्च नास्तिकजनानपि सत्कविर्यः।
सूर्यापगापुलिनजङ्गमनीलतेज
श्चित्रं विलिख्य जयदेवममुं नमामः॥

# हे भारति!

ुरु नगर स्थितायां संस्कृत पाठशालायां प्रवर्तिते नवरात्र्युत्सवे श्रावित मिदं काव्यम्।)

१

स्त्वां हृदि सङ्कलय्य कविताबन्धे प्रवृत्तोऽस्म्यहम्
षीक्रियतां कृपामयि! वचस्सर्वं यदुक्तं मया।
काचिद्भवता ज्जनश्रुतिकटु र्मत्काव्यनव्योक्तिषु
प्यर्थच्युतिरस्तु भारति! शरच्चान्द्री प्रसन्नाकृते!॥

२

सम मृदुशब्दः स्वादु यस्याश्शरीरम्
यहृदयस्पृक् स ध्वनि र्जीवितं च।
विवर रसज्ञा यल्लसन्नाट्यशाला
ल सुभगताब्धिं त्वां सदा नौमि वाणीम्॥

३

ल्मीकि काशतनयौ भवभूतिबाणौ
मन् त्वदङ्कशयने परिवर्धिता स्ते।
न्यं च यज्जननि! तैः परिपीतपूर्वम्
यं ममास्तु सुकृतादद्वय मेतदद्य॥

४

भविता यदि तावकी कृपा
अनया किं क्षणिकैहिकश्रिया।
नृपमौलि किरीट मौक्तिकैः
खलु धन्याः कवयः प्रपूजिताः॥

५

ब्रह्मानन्दसहोदर
मक्षर मानन्द मेति यत्कृपया।
सर्वोऽपि जन स्तां त्वां
वाणीं रसरूपिणीं वन्दे॥

# हर्षो हर्षविवर्धनः

(हर्ष कविना प्रणीतां रत्नावलीनाटिकां आन्ध्रभाषायाम् आख्यानकरूपेण विरचयता मया तस्य ग्रन्थस्य उपोद्घातप्रायः श्लोकोऽयं विरचितः।)

हर्षो हर्षविवर्धनो रसमयीम्
रत्नावलीं नाटिकाम्।
यामाह प्रथितां मनोहरकथां
गीर्वाणवाण्या पुरा।
सैवाद्यान्ध्रजन प्रमोदकृतये
गद्ये मृदुन्युच्यते।
सर्वेषां सरसात्मनां वितनुता
मेषा मनीषारतिम्॥

# देशचरितानि

श्रीरङ्गं श्रीनिवास रावु*

(अनु - बोम्मकण्टि श्रीनिवासाचार्यः)

१

कयापि देशस्य चरित्रपाठे
कस्तत्र दृष्टो वद गर्वहेतुः।
नृणां चरित्रं खंलु सर्व मेतत्
प्रायः परेषां परिपीडनं हि॥

२

नृणां चरित्रं खलु सर्व मेतत्
परस्परस्वापहृतेः प्रयन्तः।
नृणां चरित्रं खलु सर्व मेतत्
संग्रामरङ्गोत्थितरक्तसिक्तम्॥

३

एतत्तु बीभत्सरस प्रधानम्
पिशाचरौद्रोद्धतताण्डवाभम्।
नृणां चरित्रं खलु सर्व मेतत्
दीनप्रजावर्ग विमर्दनं हि॥

४

बलातिरिक्ताः बलहीनजातिम्
चक्रुर्हि निष्कारणमात्मदासीम्।
भूत्वा धरेशा नरघातुका स्ते
ख्याता बभूवु र्धरणीचरित्रे॥

५

किंचित् स्थलं यत्र रणोग्ररङ्गो
न लभ्यमन्विष्टमपीह भूमौ।
रक्तैः प्रसिक्तोऽखिल भूतकालो
ऽथवा कवोष्णै र्जन बाष्प जालैः॥

६

निर्वापिता नैककुटुम्बवर्गाः
मृताश्च ते ते जनताकदम्बाः।
हाहाकृतिश्चाप्यसहायकानां
श्रवःपदं याति चरित्रमार्गे॥

७

वैषम्यधीः स्वार्थपरायणत्वं
कौटिल्यमीर्ष्या पृथुवैरभावः।
नामान्तरेणात्र विवर्त मेत्य
निर्णीतवान् लोकचरित्रमार्गम्॥

८

अस्त्वेष 'जेंघिज्' खलधीः 'तमर्लेन्'
'घोरी' च 'घज्नी' ह्यथवा 'नदिर्षा'।
'सिकन्दरो'ऽस्त्वन्यतरोऽस्तु कश्चित्
सर्वोऽपि चैषः खलु घोरहन्ता॥

९

'वैकिंग्'-जनैः श्वेततरैश्च 'हूणैः'
'सिथीय'-जात्यैरथ 'पारसीकैः'।
'पिण्डारि'-षण्डैरपि 'थग्'-समूहैः
प्राकल्पि कालस्य तु खड्गसेतुः॥

१०

अज्ञान घोरान्ध्ययुगे तदानी
क्षुधाभिभूतोऽथ रुषा परीतः।
अज्ञातया तीव्रतरोग्रशक्त्या
प्रवर्त्यते स्माखिलमर्त्यलोकः॥

११

सर्वं स्वकीया प्रतिभेति मत्वा
चात्मान एवेति भुवोऽधिनाथाः।
साम्राज्यसंस्थापनमारभन्त
कृत्वा नृपाः कृत्रिम शासनानि॥

१२

सर्वाश्च साम्राज्यविभूतयस्ताः
पेकाल्प सौधा इव पातिता हि।
अन्योन्यसङ्घर्षण शक्तिजातं
नृणां चरित्रं खलु सर्व मेतत्॥

१३

चिराय या मानववञ्चनाऽऽसीद्
दौष्ट्यं च यत् शक्तिमतां धरित्र्याम्।
या कूटनीतिर्धनिना ममोघा
न त्वद्य शक्या, दिवसा गता स्ते॥

१४

एको नरोऽन्येन नरेण यस्याम्
एका च जातिः प्रबलान्यजात्या।
प्रपीड्यते तादृशसङ्घनीतिः
न त्वद्य शक्या, दिवसा गता स्ते॥

१५

चैनीय 'रिक्षा'-प्रविचालको वा
चेक्-देशवर्ती खनिकार्मिको वा।
ऐर्लण्ड-नौकाश्रय कार्मिको वा
सर्वे त आर्ताः परपीडनेन॥

१६

'जूलू' च 'नीग्रो' च तथा 'हुटेंटाट्'
खण्डान्तरस्था विविधाल्पदेश्याः।
उद्घोषयेयुः पुनरेककण्ठं
नरेतिहासस्य यथार्थतत्त्वम्॥

१७

यस्सङ्गरो यत्र यतः प्रवृत्तः
यद्राज्य माभात्समयं कियन्तम्।
तदीयवाराश्च पुराणपत्रा
ण्येतानि भ्रात र्न चरित्रसारः॥

१८

अस्याश्च राज्ञ्याः प्रणयप्रसङ्गो
व्ययश्च दुर्गाक्रमणे कियान् वा।
वृत्तान्त एषोऽपि पुराण एव
भ्रात र्न चैतानि चरित्रसारः॥

१९

नरेतिहासस्य महान्ध्यकोणे
स्थिता अधो दृष्टिपथं न याताः।
आवश्यकास्तास्तु कथा इदानीं
सत्योक्तयो हन्त न गूहनीयाः॥

२०

'नैल्'-तीर-राज्ये सति कीदृशी सा
बभूव साधारणपौरवृत्तिः?।
के 'ताज् महाल'-निर्मितिकाल आसन्
शिलाचयोद्वाहक कार्मिका स्ते?॥

२१

साम्राज्य विस्तारकदण्डयात्रा-
विधौ पदातिस्तुतसाहसः कः?।
आन्दोलिका न प्रभुणाऽधिरुढा
तस्याश्च दीना वद वाहकाः के॥

२२

या 'टाक्शिला'-पाटलिपुत्रपुर्योः
या मध्यमक्षोणिससुद्रतीरे।
हरप्प-मोहेंजदरो-नगर्योः
क्रोमानियानादिगुहामुखेषु॥

२३

चरित्रसन्ध्यासमये तदानीं
नरस्य गाथाविवृतिः कथं सा।
कस्मिंश्च काले ननु कैश्च देशैः
किं साधितं यत् परमार्थभूतम्॥

## २४

किं शिल्पमत्राजनि? किं च काव्यं
शास्त्रं च, गान्धर्वविधिः क आसीत्?
प्रस्थानं मेतत् प्रति कां नु दीप्तिम्?
कं स्वप्नमुद्दिश्य दिगन्तयात्रा?॥

●'श्रीश्री' इति प्रसिद्धस्य आधुनिक–तेलुगुकवेः तेलुगु खण्डकाव्यस्य संस्कृतानुवादः।



# जयगीता

(गणराज्यदिनोत्सवावसरे मद्रास् नगरीस्थस्य आकाशवाणीकेन्द्रस्य आह्वानं पुरस्कृत्य विरचिता, तत्केन्द्रतः प्रसारिता च। अनन्तरं संस्कृतप्रतिभायां प्रकाशिताऽऽसीत् । केन्द्र साहित्य अकाडमी प्रकटिते भारतीय कवितेति सङ्कलितग्रन्थे १९५४ तमे वर्षे प्रकाशिता च आसीत्।)

१

सुप्ते समस्त भुवनेऽपि महान्धकारे
या जाग्रती भरतभूः धृतधर्मदीप्तिः।
अस्या न विस्मयपदं पुनरात्मलाभः
तद्दास्यमेव तनुते बत विस्मयं नः॥

२

दास्यातिभीषण सुदीर्घनिशावसाने
स्वातन्त्र्यपद्ममिह यद्विकचं मनोज्ञम्।
नानासहस्रदलशोभि विराजतां तत्
सौहार्दसौरभजिताखिलभूमिचक्रम्॥

३

प्राचेतसादि ऋषिमण्डल कम्रमूलः
श्रीकालिदास मुख सत्कवि चारुशाखः।
सूर्दास पोतन रवीन्द्र मुख प्रसूनः
साहित्यवृक्ष इह दीव्यति भारतीयः॥

४

हिन्दूदधौ हिमगिरौ विदितं यदीयं
गाम्भीर्य मुन्नतशिरस्त्व मनन्यदृश्यम्।
सा भारतीयपटुसंस्कृति रेव नूनम्
युद्धज्वरार्तभुवनाय विमोचनाशा॥

५

साधारणं सुमनसं प्रति सौमनस्यम्
प्राज्ञो विरोधिषु च य स्सुमना स्स एव।
किं न व्यनक्ति सकलावनिशान्तिकामा
श्रीभारतीति 'सहजीवन' मन्त्रकल्पः॥

६

आत्मश्रिया स्फुरति भारतभू पताका
वर्णत्रयाञ्चित पटाङ्कित धर्मचक्रा।
बालाऽपि लोकपरिषत्सु यशश्चिनोति
माध्यस्थ्यमाकलयती कलहोपशान्त्यै॥

७

मृत्वाऽमृतत्वमधिगम्य चकासते ये
स्वातन्त्र्ययज्ञ हविरायित योधयूथाः।
अद्य स्मरामि हृदि तान् नतमस्तकोऽहम्
धन्यात्मनो भरतभूमिजनोत्तमर्णान्॥

८

स्वातन्त्र्यपर्वदिवसे प्रमदोत्सवेऽस्मिन्
वर्षन्ति हेममयपुष्पशुभाशिषस्ते।
नाकस्थिताः भरतराज्य रमाधिनाथाः
योधा महाकविवरा स्सचिवाश्च हृष्टाः॥

९

जयतु जयतु संसाराम्बुधौ नौरहिंसा
जयतु जयतु सत्यं मानवात्मप्रदीपः।
जयतु जयतु धर्मो भारती मौलिरत्नम्
जयतु जयतु वाणी भारतीया मनोज्ञा॥



# कृष्णोऽहम्

(मद्रास्नगरे रायपेटस्थित्तं गौडमठं हष्ट्वा, आन्ध्रभाषायामादौ विरचितेयं कविता, ततः गैर्वाण्यां परिवर्तिता च)

१

ह्योऽपश्यम् गौडमठे
राधां तद्वीक्षणेऽभ्यजानं च।
रेखां कामपि विरह
प्रसवां निरुपम प्रमोदमयीं॥

२

लक्ष्यरहित कज्जलयुत
दृष्टेः क्षणमह मभूव मिव लक्ष्यम्।
अस्फुरदिव तन्नयने
ऽभिज्ञानमपि क्षणे तस्मिन्॥

३

यावदहं दर्पणमति
रासं स्वं द्रष्टुमात्ममूलेऽभूत्।
वेणुरवो वा बृन्दा
वीथीविचरन्मृदुमहो वा॥

# विद्वदभिनन्दनम्

(सुविश्रुताऽऽधुनिक सुरवाणी कविशेखराणां डा. राघवन् महोदयानां षष्ट्यब्दि पूर्त्युत्सवावसरे प्रेषितेय मभिनन्दनकविता।)

१

गुरुश्छात्रः सुहृद्बन्धुः
पिता पुत्रश्च सन्नसौ।
प्राप्तवानू जी[illegible]ात्
प्रीतिमेकं फलं कृती॥

२

गीर्वाणवाणीचरणाब्जभृङ्गः
स्वझङ्कृतिर्व्याप्त समस्तलोकः।
धीमान् कवि श्शास्त्रविदद्य राघवः
षष्ट्यब्दपूर्तौ कविभिः प्रगीयते॥

३

काञ्चीपुरस्वामिकृपात्तपुण्यो
धन्योऽभवद्यः कविकोकिलाख्यः।
शरच्छतं जीवतु जीवयेत् सः
गीर्वाणवाणीप्रणयं च लोके॥

४

अन्योऽन्यविद्वेषवशाः स्वपुत्रीः
स्वां मातरं काममनाद्रियन्तीः।
वीक्ष्याऽद्य खिन्ना खलु देववाणी
स्वस्था भवेत् 'राघवरङ्ग' पुष्टा॥

५

षष्टिपत्रसमुत्फुल्लम्
राघवाख्यं रसोज्ज्वलम्।
संस्कृतोक्तिह्रदे रम्यम्
शतपत्रं विराजते॥

